

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -7

Bk. Demlen 2000

## Why Propagation of Samskrit and How ?

### Increasing the number of Samskrit Students

It is clear that there is an impact of western culture on modern society. This phenomena is seen in the field of languages also. Those who speak English are considered highly educated and they are respected in society. How can Samskrit accupy an exalted place under such conditions ? Therefore Samskrit lovers have a duty to extend their cooperation in securing high place for Samskrit.

This can be done. Every home can have a student of Samskrit. To start with have a student of Samskrit in your home. Then inspire others in your neighbourhood to have at least one student of Samskrit and thus reach every home this kind of a service is invaluable for propagation of Samskrit .

### Study of one Sastra

All the sciences in ancient India were written in Samskrit. By the study of the sastras the language gets improved and one acquires knowledge, individuality. Thus study Sastras every day and get good results.

**Note:**
The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.



ॐ

जयतु संस्कृतम् - जयतु मनुकुलम्

*Victory of Samskrutam - Victory of mankind*

# संस्कृतभारती

**Samskrita Bhāratī**

**पत्रालयद्वारा संस्कृतम्**

**Samskrit Through Correspondence**

'Aksharam' 8th cross, Girinagar II Phase,
Bangalore-560 085. Ph.: 6721052

## परिचयः - PARICHAYA

**सप्तमः पाठः - SEVENTH LESSON**

॥ अनुक्तमप्यूहति पण्डितो जनः ॥

The wise understand even that which is not told.

### १. विभक्तिपरिचयः

**सप्तमीविभक्तिः - Locative case**

(The meaning of this case - location, there in : eg. गृहे - in the house)

| | पुं. | स्त्री. | न. |
|---|---|---|---|
| अकारान्तः- | रामे-रामेषु | | ज्ञाने-ज्ञानेषु |
| आकारान्तः- | -- | रमायां-रमासु | -- |
| इकारान्तः- | हरौ-हरिषु | मत्याम्, मतौ }-मतिषु | दध्नि, दधनि }-दधिषु |
| ईकारान्तः- | -- | नद्याम्-नदीषु | -- |
| उकारान्तः- | गुरौ-गुरुषु | धेन्वाम्, धेनौ }-धेनुषु | मधुनि-मधुषु |

सर्वनाम 'अस्मत्'शब्दः -- मयि - अस्मासु
सर्वनाम 'युष्मत्'शब्दः -- त्वयि - युष्मासु

**Sentences with words in the Locative case.**

१. [1]कमलानि **कासारे**[a] सन्ति ।
२. पुष्पाणि **लतायां** विकसन्ति ।
३. पर्णानि **भूम्यां** पतन्ति ।
४. छात्राः **कक्ष्यासु**[b] उपविशन्ति ।
५. वाहनानि **मार्गेषु** धावन्ति ।
६. भक्तिः **शम्भौ** कर्तव्या ।
७. मयूराः[c] **गिरिषु** नृत्यन्ति ।
८. तरुणाः **नद्यां** तरन्ति[d] ।
९. **समुद्रे** मौक्तिकानि[e] लभ्यन्ते ।
१०. बालिकाः **क्रीडाङ्गणे** क्रीडन्ति ।
११. गजाः **अरण्ये** सञ्चरन्ति ।
१२. नार्यः **सभायां** गायन्ति ।
१३. कल्पतरवः **अमरावत्यां** वर्तन्ते ।
१४. कार्यालयाः **नगरीषु** भवन्ति ।
१५. अहं [2]**सायङ्काले** गच्छामि ।
१६. ऋषयः **भारतदेशे** आसन् ।
१७. विरामः **भानुवासरे** भवति ।
१८. सः [3]**आसन्दे**[f] उपविशति ।
१९. **मातृभूमौ** प्रीतिः कर्तव्या ।
२०. **महाभारते** अनेककथाः विद्यन्ते ।

a. lake, b. class, c. peacock, d. swim, e. pearls, f. chair





**Some rules pertaining the Locative case**

1. The answer to the question on the verb as "Where?" (कुत्र) will be in the Locative case. eg. कमलानि कासारे सन्ति । कुत्र सन्ति ? कासारे (in Locative case)
2. The answer in terms of time in response to the question on the verb as "When?" (कदा) will be in the Locative case; eg. अहं सायङ्काले गच्छामि । कदा ? सायङ्काले (Locative case expressing time.)
3. The word expressing something on which one sits, stands, etc, will be in the Locative case. eg. कटे (on the mat) उपविशति ।

**प्रश्नाः**

(अ) १. पुष्पाणि कुत्र विकसन्ति ?
२. कानि मार्गे धावन्ति ?
३. के कुत्र तरन्ति ?
४. नार्यः कुत्र गायन्ति ?
५. भक्तिः कुत्र कर्तव्या ?
६. मौक्तिकानि कुत्र लभ्यन्ते ?
७. अहं कदा गच्छामि ?
८. गजाः कुत्र सञ्चरन्ति ?

(आ) Convert the following words in the Nominative case in to words in the Locative case and use them in your sentences:

Eg. सोमवासरः - त्वं सोमवासरे आगच्छ ।

१) वसन्तकाल: २) पङ्क्ति:[1] ३) अद्रि: ४) वीथी[2] ५) शाला ६) जलधि:[3] ७) पत्रिका ८) रामायणम् ९) ग्राम: १०) पृथिवी

(इ) Translate into Samskrit:

1. The door-keepers stand at the door[4].
2. The moon shines[5] in the sky.
3. Students study in the school.
4. Books are in the box[6].
5. I sit on the mat[7].
6. The food is in the vessel.
7. I study in the morning.
8. People take[8] bath in the river.

## २. चाटुश्लोकः

There was a teacher who had earned a good name as a teacher. His method of teaching came to light later. It was like this:

वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ?

He was telling his pupils- "Read. Time is over. Everything will be clear subsequently." What text could be difficult for one who teaches in that manner?

---

1. line, 2. street, 3. sea, 4. द्वारम् 5. शोभते 6. पेटिका, 7. कट:, 8. कुर्वन्ति





## ३. समस्या

Sometimes the problems are amusing. The words used in putting the problem look like words of some other language. For instance - वार्धके यौवने वापि केसरीभात् विशिष्यते । The sentence appears to mean- "In old age or youth, 'Kesaribhat' (a sweet dish) is highly tasty." If you closely study the word you will realise that it can be split as केसरी + इभात् (केसरीभात् by सवर्णदीर्घसन्धि:), केसरी (केसरिन् Nakaranta Singular) means 'a lion'. इभ: means an elephant. Then the sentence means: 'In old age or in youth the lion excels the elephant.' (वार्धके यौवने वापि केसरी इभात् विशिष्यते ।)

## ४. सुभाषितम्

रत्नैर्महाब्धेस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥

**पदविभागः -**

रत्नै:, महाब्धे:, तुतुषु:, न, देवा:, न, भेजिरे, भीमविषेण, भीतिम्, सुधाम्, विना, न, प्रययु:, विरामम्, न, निश्चितार्थात्, विरमन्ति, धीरा: ॥

**तात्पर्यम् -**

While churning the ocean for nectar, Gods were not pleased with gems secured from the ocean. Nor did they entertain fear when they secured the terrible poison. They churned the ocean until they got nectar. Thus persons with determination do not swerve from their goal.

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥

**पदविभागः -**

पापात्, निवारयति, योजयते, हिताय, गुह्यम्, निगूहति, गुणान्, प्रकटीकरोति, आपद्गतम्, च, न, जहाति, ददाति, काले, सन्मित्रलक्षणम्, इदम्, प्रवदन्ति, सन्तः ॥

**तात्पर्यम् -**

Wards off from sin; prompts for the good deal; conceals the secret; reveals the merits; does not leave (the friend) in distress; renders help in a crisis- these, the wise say, as the characteristics of a good friend.

## ५. पदसङ्ग्रहः

दा - To give

१) यच्छति २) दीयते ३) दास्यति
४) दातव्यम्-दानीयम् ५) दत्तः-दत्ता-दत्तम् ६) दत्तवान्-दत्तवती
७) यच्छन्-यच्छन्ती ८) दत्त्वा-प्रदाय ९) दातुम् ।

क्रन्द् - To cry

१) क्रन्दति २) क्रन्द्यते ३) क्रन्दिष्यति
४) क्रन्दितव्यम्-क्रन्दनीयम् ५) क्रन्दितः-क्रन्दिता-क्रन्दितम् ६) क्रन्दितवान्-क्रन्दितवती ७) क्रन्दन्-क्रन्दन्ती
८) क्रन्दित्वा आक्रन्द्य ९) क्रन्दितुम् ।





पत् - To fall

१) पतति २) पत्यते ३) पतिष्यति
४) पतितव्यम्-पतनीयम् ५) पतितः-पतिता-पतितम् ६) पतितवान्-पतितवती ७) पतन्-पतन्ती ८) पतित्वा-निपत्य ९) पतितुम् ।

गै - To Sing

१) गायति २) गीयते ३) गास्यति
४) गातव्यम्-गानीयम् ५) गीतः-गीता-गीतम् ६) गीतवान्-गीतवती ७) गायन्-गायन्ती ८) गीत्वा-प्रगाय
९) गातुम् ।

## ६. काव्यकथा

### दशरथस्य शापः

दशरथः सम्यक् राज्यं परिपालयति स्म । किन्तु बहुकालं सः पुत्ररहितः आसीत् । अतः तस्य चिन्ता आसीत् । देवेन्द्रः देवलोकस्य नृपः । तस्य राजधानी अमरावती । राक्षसाः देवानां वैरिणः । ते देवलोकस्य आक्रमणं कृतवन्तः । देवाः भीताः । देवेन्द्रः दशरथस्य साहाय्यं प्रार्थितवान् । दशरथः देवलोकं गत्वा असुरैः सह युद्धं कृतवान् । युद्धे राक्षसाः पराजिताः । देवानां सौख्यं जातम् ।

कालः अतीतः । एकदा वसन्तमासः । दशरथः मृगयां कर्तुं वनं गतवान् । वने हिंस्राः प्राणिनः आसन् । नृपः अनेकान् प्राणिनः हतवान् । अन्ते दशरथः रात्रौ वने एव विश्रान्तिं स्वीकृतवान् ।

प्रातः दशरथः अश्वम् आरूढवान् । तमसानदीतीरं गतवान् । नदीतीरे तपस्विकुमारः आसीत् । सः कुम्भे जलं पूरयति स्म । नृपः दूरात् तं शब्दं श्रुतवान् । गजस्य शब्दः इति सः चिन्तितवान् । गजं हन्तुं बाणं विसृष्टवान् । बाणः तपस्विकुमारम् अताडयत् । कुमारः 'हा ! तात !' इति क्रन्दनं कृतवान् । नृपः समीपं गतवान् । दृष्ट्वा नृपः अतीव दुःखितः । पतितं तपस्विकुमारम् आश्रमं नीतवान् । तत्र वृद्धौ दम्पती आस्ताम् । तपस्विकुमारः मृतः । मृतं पुत्रं दृष्ट्वा वृद्धः कुपितः । दशरथाय 'पुत्रशोकात् तवापि मरणं भविष्यति' इति शापं दत्तवान् । शापं श्रुत्वा दशरथः दुःखितः अभवत् । तथा पुत्रः भवति इति सन्तुष्टः च अभवत् । तथापि शापभारेण सह दशरथः राजधानीं प्रत्यागतवान् ।

## DASHARATHA'S CURSE

Dasharatha was ruling the kingdom well. But he did not have children for a long time. Hence he was worried.

Devendra was the king of heaven. His capital was Amaravathi. Demons were the enemies of gods. They captured heaven. Gods were frightened. Devendra asked for Dasharatha's help. Dasharatha went to heaven and conducted war against the demons. The demons were defeated in the battle. Gods were happy.

Time passed. Once it was spring time. Dasharatha went to the forest for hunting. There were cruel animals in the forest. The king killed many animals. At last he took rest during the night in the forest.





Next morning he ascended the horse. He came to the bank of river Tamasa. There was a son of an ascetic on the bank of the river. He was filling his pot with water. The king heard that noise from a distance. He thought that it was the sound of an elephant. To kill the elephant he discharged an arrow. The arrow struck the ascetic's son. The ascetic's son cried "Oh! Father." The king went there. On seeing that, the king felt extremely sorry. He took the ascetic's son to the hermitage. There were old couples. The ascetic's son died. The old ascetic got angry. He cursed Dasharatha. "You will also die of sorrow on account of your son." The king was grieved on hearing the curse. He also felt happy that he would get a son. Yet with the burden of the curse, Dasharatha returned to his capital.

### प्रश्नाः

१. किमर्थं दशरथस्यं चिन्ता आसीत् ?
२. दशरथः किमर्थं देवलोकं गतवान् ?
३. मृगयायां दशरथः किं कृतवान् ?
४. नृपः दूरात् कं शब्दं श्रुतवान् ?
५. शापं श्रुत्वा दशरथस्य दुःखं सन्तोषः च किमर्थम् अभवत् ?

### ७. अन्वयक्रमः

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ।।१२।।

पदविभागः -

पुरा, शक्रम्, उपस्थाय, तव, उर्वीम्, प्रति, यास्यतः, आसीत्, कल्पतरुच्छायाम्, आश्रिता, सुरभिः, पथि ।

अन्वयः -

पुरा, शक्रम्, उपस्थाय, उर्वीं, प्रति, यास्यतः, तव, पथि, कल्पतरुच्छायाम्, आश्रिता, सुरभिः, आसीत् ।

अन्वयार्थः -

पुरा - Formerly, शक्रम् उपस्थाय - having waited upon Indra, उर्वीं प्रति - towards earth, यास्यतः - going, तव - your, पथि - on the way, कल्पतरुच्छायाम् - the shade of the wish-yielding tree, आश्रिता - taking shelter, सुरभिः - the divine cow, आसीत् - was.

तात्पर्यम् -

Through regular succession, your family has been helping Indra in battle fronts and has earned the graciousness of Indra. Following your ancestors' footsteps you too were once returning towards the earth after rending help to Indra. On the either side of the way you were travelling, there were wish-yielding trees. Under one of these trees the heavenly cow Kamadhenu was standing.

धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥१३॥

पदविभागः -

धर्मलोपभयात्, राज्ञीम्, ऋतुस्नाताम्, इमाम्, स्मरन्, प्रदक्षिणक्रियार्हायाम्, तस्याम्, त्वम्, साधु, न, आचरः ॥





अन्वयः -

ऋतुस्नाताम्, इमां, राज्ञीम्, धर्मलोपभयात्, स्मरन्, प्रदक्षिणक्रियार्हायाम्, तस्याम्, त्वं, साधु, न, आचरः ॥

अन्वयार्थः -

ऋतुस्नाताम् - Bathed after menstruation, इमं राज्ञीम् - this queen Sudakshina, धर्मलोपभयात् - out of fear of violation of dharma, स्मरन् - remembering, प्रदक्षिणक्रियार्हायाम् - deserving circumambulation, तस्याम् (धेन्वाम्) - in regard of that cow, त्वम् - you, साधु - in a befitting manner, न आचरः - did not act.

तात्पर्यम् -

The divine cow standing under the shade of the wayside wish-yielding tree deserved to be shown respect. Returning then from Indra, you did not offer salutation to the cow. However, it is not your imprudence for not having done so. It can never be imagined in your case. At that time you were thinking of your wife in her course. According to the Dharmashastras a husband should be by the side of his wife in her courses. Otherwise dharma is violated. Immersed in these thoughts this inadvertant thing happened.

## ८. अनुवादपद्धतिः

Without going into the meaning of each word in a sentence, the total sense of the sentence would be wrong. Moreover, each language has peculiar idiomatic phrases.

Their literal translation will be incorrect and unjustified. After understanding the meaning of these phrases, the corresponding words should be organised. Let us study the following phrases for example:

| Phrase | Incorrect Translation | Correct Translation |
|---|---|---|
| A Black sheep | कृष्णः अजः | वञ्चकः |
| An old hand | प्राचीनः हस्तः | अनुभवी |
| A snake in the grass | तृणेषु स्थितः सर्पः | गुप्तशत्रुः |
| Blue blood | नीलरक्तम् | कुलीनः |
| Go to the dogs | शुनकं प्रति गच्छतु । | नाशं प्राप्नोतु |
| Hands be full | हस्तौ पूर्णौ भवताम् । | कार्यमग्रः भवतु |
| In cold blood | शीतरक्ते | उद्देशपूर्वकम् |

(Sometimes depending on the context, translation needs to be done differently.)

You may also collect such phrases if possible and it is necessary that extreme care should be taken in employing these phrases.

## ९. सङ्ग्राह्यविषयाः

Groups that are well known as constituted by eight:

अष्ट दिक्पालकाः - इन्द्रः, अग्निः, यमः, निर्ऋतिः, वरुणः, वायुः, कुबेरः, ईशानः ।





अष्ट दिग्गजाः - ऐरावतः, पुण्डरीकः, वामनः, कुमुदः, अञ्जनः, पुष्पदन्तः, सार्वभौमः, सुप्रतीकः ।

अष्ट सिद्धयः - अणिमा, महिमा, गरिमा, लघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वम्, वशित्वम् ।

अष्ट मङ्गलानि - सिंहः, वृषभः, गजः, कलशः, व्यजनम्, ध्वजः, भेरी, दीपः ।

अष्टाङ्गनमस्कारः - The Namaskara involving the chest, head, eyes, mind, words, feet, hands and ears.



ॐ

# संस्कृतभारती

## पत्रालयद्वारा संस्कृतम्

### परिचयः

### सप्तमः पाठः

### प्रश्नः

1. Write the 'anvayartha' and 'tatparya' of the following stanzas:

   अ) दृष्ट्वेमं स्वजनं कृष्ण ! युयुत्सुं समुपस्थितम् ।
   सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥

   (दृष्ट्वा + इमम्, युयुत्सुम् - desiring to fight, सीदन्ति - are collapsing.)

   आ) वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
   लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥

   (चेतांसि - minds, अर्हति - capable of )

2. Change the following words into different cases and form sentences with them:

   Eg. - ग्रामः

   ग्रामं गच्छामि । ग्रामे गृहाणि सन्ति । ग्रामात् आगच्छामि ।

   १. आपणः २. शिक्षकः ३. नदी ४. आकाशः ५. गृहम् ६. वृक्षः



# Treasure of knowledge in Ancient India

## The Scientific matter revealed in the Mahabharata

Indians consider the Mahabharata in various ways namely Mythology, philosophy, Indian history and thus it is called an Encyclopaedia. It is therefore said in the work - 'what is here is found every where; What is not hear is nowhere'.

When one approaches the work only with a research mind one may not get a correct picture. It is not wrong to assess the scientific points stated in the Mahabharata. One can certainly find matters related to astronomy, chemistry, minerology in many places. An objective analysis with a scientific mind leads to the conclusion that our anecestors had a scientific mind. Some of the important points of science in the Mahabharata are noted below

## Physics

Momentum, a theory where motion, of one object in relation to the other is well known.

'The Sun moves round the earth. Consequently day and night happen 'This was the ancient belief. But this wrong notion is said to have been removed by Copernicus in the fifteenth century. Copenicus held this view aganist the concept 'The motion of one object is always in relation to another'.

When an object is in motion it is always an illusion that another object appears to move while the former is stationary (As when a vehicle moves it appears that the tree by its side is moving while the real one is stationary) This is the basic concept on which the theory rests.

But one will be surprised to see that the same point is described in the Mahabharata.

